॥ श्रीः ॥



# ॥ वेदान्तसारः ॥

---

अखण्डं[1] सच्चिदानन्दमवाङ्मनसगोचरम् ॥ आत्मानमखिला-
त्माश्रयेऽभीष्टसिद्धये ।१। अर्थतो[2] ऽप्यद्वयानन्दान[3] तीतद्वैत-
नतः[4] ॥ गुरूनाराध्य[5] वेदान्तसारं वक्ष्ये यथामति ॥ २ ॥
न्तो नामोपनिषत्प्रमाणन्तदुपकारीणि शारीरकसूत्रादी[6] नि
। अस्य वेदान्तप्रकरणत्वात्तदीयैरेवानुबन्धैस्तद्वत्तासिद्धेर्न ते पृथ-
लोचनीयाः। तत्रानुबन्धो नाम अधिकारिविषयसंबन्धप्रयोजना-
। अधिकारी तु विधिवदधीतवेदवेदाङ्गत्वेनापाततोऽधिगता
लवेदार्थो ऽस्मिन् जन्मनि जन्मान्तरे वा काम्यनिषिद्धवर्जनपुरः-
रं नित्यनैमित्तिकप्रायश्चित्तोपासनानुष्ठानेन निर्गतनिखिलक-

---

[1] सजातीयविजातीयस्वगतभेदशून्यमित्यर्थः, अत्र सच्चिदा-
न्दमिति प्रयोजनम्, अखण्डमिति विषयः, शास्त्रविषययोः
तिपाद्यप्रतिपादकभावः सम्बन्धः तत्कामोऽधिकारीत्यनुबन्धच-
ष्टयमर्थादुक्तम्। [2] अपिशब्देन न केवलं शब्दतो डित्थकपित्था-
दवत्संज्ञामात्रं व्यवस्थितमपि तु अर्थतः शब्दतश्चेति। [3] अ-
द्वयासावानन्दश्चाद्वयानन्दस्तान्। [4] अतीतं गतं द्वैतभानं यत-
स्मात्। [5] कायवाङ्मनोभिर्नमस्कारगोचरीकृत्य। [6] आदिशब्देन
भगवद्गीताद्यध्यात्मशास्त्राणि गृह्यन्ते ॥

ल्मषतया नितान्तनिर्म्मलस्वान्तः साधनचतुष्टयसंपन्नः[१] प्रमाता[२]
काम्यानि स्वर्गादीष्टसाधनानि ज्योतिष्टोमादीनि । निषिद्धा-
नि नरकाद्यनिष्टसाधनानि ब्राह्मणहननादीनि । नित्यान्यकरणे
प्रत्यवायसाधनानि सन्ध्यावन्दनादीनि । नैमित्तिकानि पुत्त्रजन्मा-
द्यनुबन्धीनि जातेष्ट्यादीनि । प्रायश्चित्तानि पापक्षयसाधनानि
कृच्छ्रचान्द्रायणादीनि । उपासनानि सगुणब्रह्मविषयमानसव्यापा
ररूपाणि शाण्डिल्यविद्यादीनि । एतेषां नित्यादीनां बुद्धिशुद्धिः
परं प्रयोजनम् । उपासनानान्तु चित्तैकाग्र्यम् "तमेतमात्मानं
वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽना-
शकेने"त्यादिश्रुतेः । "तपसा कल्मषं हन्ति विद्ययामृतमश्नुत" इति
स्मृतेश्च । नित्यनैमित्तिकप्रायश्चित्तोपासनानान्तु अवान्तरफलं पितृ
लोकसत्यलोकप्राप्तिः "कर्म्मणा पितृलोको विद्यया देवलोक"
इत्यादिश्रुतेः । साधनानि नित्यानित्यवस्तुविवेकेहामुत्रार्थफलभो
गविराग शमदमादिषट्कसम्पत्तिमुमुक्षुत्वानि नित्यानित्यवस्तु-
विवेकस्तावद्ब्रह्मैव नित्यं वस्तु ततोऽन्यदखिलमनित्यमिति विवेच-
नम् । ऐहिकानां स्रक्चन्दनादिविषयभोगानां कर्म्मजन्यतयाऽनि-
त्यत्ववदामुष्मिकाणामप्यमृतादिविषयभोगानामनित्यतया तेभ्यो
नितरां विरतिरिहामुत्रार्थफलभोगविरागः । शमदमादयस्तु शम,-
दमो,परति,तितिक्षा,समाधान,श्रद्धा,ख्याः । शमस्तावच्छ्रवणादि-

[१]वक्ष्यमाणसाधनचतुष्टयसंपन्नः । [२]प्रमाता अन्तःकरणे
प्रतिबिम्बितं चैतन्यमित्यर्थः ॥

व्यतिरिक्तविषयेभ्यो मनसो निग्रहः। दमोवाह्येन्द्रियाणान्तद्व्यतिरिक्तविषयेभ्यो निवर्तनम्। निवर्तितानां तेषां तद्व्यतिरिक्तविषयेभ्य उपरमणमुपरतिरथवा विहितानां कर्म्मणां विधिना परित्यागः। तितिक्षा शीतोष्णादिद्वन्द्वसहिष्णुता। निगृहीतस्य मनसः श्रवणादौ तदनुगुणविषयेषु च समाधिः[१] समाधानम्। गुरुवेदान्तवाक्येषु विश्वासः श्रद्धा। मुमुक्षुत्वं मोक्षेच्छा। एवंभूतः प्रमाताऽधिकारी। "शान्तोदान्त" इत्यादिश्रुतेः। उक्तंच "प्रशान्तचित्ताय जितेन्द्रियाय प्रहीणदोषाय यथोक्तकारिणे। गुणान्वितायानुगताय सर्वदा प्रदेयमेतत्सततं मुमुक्षव" इति ॥ विषयो जीवब्रह्मैक्यं शुद्धं चैतन्यं प्रमेयं तत्रैव वेदान्तानां तात्पर्यात्। संवन्धस्तु तदैक्यप्रमेयस्य तत्प्रतिपादकोपनिषत्प्रमाणस्य च बोध्यबोधकभावलक्षणः। प्रयोजनन्तु तदैक्यप्रमेयगताज्ञाननिवृत्तिः[२] स्वस्वरूपानन्दावाप्ति[३]श्च "तरतिशोकमात्मवित्" "ब्रह्म वेद ब्रह्मैवे" त्यादिश्रुतेः। अयमधिकारी जननमरणादिसंसारानलसंतप्तोऽतिदीप्तशिरा जलराशिमिवोपहारपाणिः श्रोत्रियं ब्रह्मनिष्ठं गुरुमुपसृत्य तमनुसरति" तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः

१ नैरन्तर्येण चिन्तनम्। २ पुनरुत्पत्त्यभावः। ३ यथा लोके कस्य चिद्विस्मृतकण्ठमणेस्तत्प्रयुक्तशोकाग्निसन्दह्यमानस्याप्तोपदेशोत्तरकालं स्वकण्ठगतचामीकरप्राप्तेरपि पुरुषार्थत्वात्फलत्वं दृष्टमेवमत्रापि नित्यप्राप्तस्यात्मनोऽज्ञानमोहान्धकारावृतत्वेन विस्मृतस्वस्वरूपस्य पुरुषस्य गुरुश्रुतिवाक्यश्रवणानन्तरमज्ञानमोहान्धकारनिवृत्तौ सत्यां स्वयंप्रकाशमानचिद्रूपस्य सिद्धस्यैवात्मनः फलत्वमुपचर्यत इति भावः॥

श्रोत्रियं ब्रह्मनिष्ठमि"त्यादिश्रुतेः। स परमकृपयाऽध्यारोपापवादन्यायेनैनमुपदिशति"तस्मै स विद्वानुपसन्नाय आत्मतत्त्वं प्राहे"त्यादिश्रुतेः। असर्पभूतायां रज्जौ सर्पारोपवद्वस्तुन्यवस्त्वारोपोऽध्यारोपः। वस्तु सच्चिदानन्दमद्वयं ब्रह्म। अज्ञानादिसकलजड़समूहोऽवस्तु। अज्ञानन्तुसदसद्भ्यामनिर्वचनीयं त्रिगुणात्मकं ज्ञानविरोधि भावरूपं[1] यत्किंचिदिति[2] वदन्ति, अहमज्ञ[3] इत्यनुभवात्,"देवात्मशक्तिं स्वगुणैर्निगूढ़ामि"त्यादिश्रुतेश्च। इदमज्ञानं समष्टिव्यष्ट्यभिप्रायेणैकमनेकमिति व्यवह्रियते। तथा हि यथा वृक्षाणां समष्ट्यभिप्रायेण वनमित्येकत्वव्यपदेशो यथा वा जलानां समष्ट्यभिप्रायेण जलाशय इति तथान्तः करणोपाधिभेदेन नानात्वेन प्रतिभासमानानां जीवगताज्ञानानां समष्ट्यभिप्रायेणतदेकत्वव्यपदेशः"अजामेकामिति"श्रुतेः। इयंसमष्टि[4] रुत्कृष्टोपाधितया विशुद्धसत्त्वप्रधाना। एतदुपहितं चैतन्यं सर्वज्ञ-

१ ज्ञानाभाव एवाज्ञानमिति तार्किकमतं निराकरोति भावरूपमिति। २ त्रिगुणात्मकभावरूपत्वेऽपि इदमित्थमेवेति पिण्डीकृत्य प्रदर्शयितुं न शक्यत इत्याह। यत्किं चिदिति। किमप्यघटितघटनापटीयसी इत्यर्थः। ३ अनिर्वचनीयभावरूपाज्ञानसद्भावेऽनुभवमेवोदाहृत्य दर्शयति। अहमज्ञ इति। अहमज्ञो मामहं न जानामीत्यपरोक्षावभास एव प्रमाणमित्यर्थः। ४ नानाजीवगतनिकृष्टान्तःकरणव्यष्ट्युपाध्यपेक्षया समष्ट्युपाधेरस्य वैलक्षण्यं दर्शयति। इयं समष्टिरिति। विगतरागादिदोषसकलकार्यप्रपञ्चस्य जगत्कारणभूतस्याज्ञानस्य समष्टिभूतोत्कृष्टोपाधित्वेन विशुद्धसत्त्वप्राधान्यमिति भावः॥

त्वसर्वेश्वरत्वसर्वनियन्तृत्वादिगुणकमव्यक्तमन्तर्यामि जगत्कारणमीश्वर इति च व्यपदिश्यते सकलाज्ञानावभासकत्वात् "यः सर्वज्ञः ससर्वविदि"तिश्रुतेः, ईश्वरस्येयं समष्टिरखिलकारणत्वात् कारणशरीरमानन्दप्रचुरत्वा[१] त्कोशवदाच्छादकत्वा[२] च्चानन्दमयः कोशः सर्वोपरमत्वा[३] त्सुषुप्तिः, अत एव स्थूलसूक्ष्मप्रपञ्चलयस्थानमिति चोच्यते। यथा वनस्य व्यष्ट्यभिप्रायेणवृक्षा इत्यनेकत्वव्यपदेशो यथा वा जलाशयस्य व्यष्ट्यभिप्रायेण जलानीत्यनेकत्वव्यपदेशस्तथाऽज्ञानस्य व्यष्ट्यभिप्रायेण तदनेकत्वव्यपदेशः "इन्द्रो मायाभिः पुरुरूप ईयत" इत्यादिश्रुतेः। अत्र व्यस्तसमस्तव्यापित्वेन व्यष्टिसमष्टिताव्यपदेशः। इयं व्यष्टिर्निकृष्टोपाधितया मलिनसत्त्वप्रधाना,[४] एतदुपहितं चैतन्यमल्पज्ञत्वादनीश्वरत्वादिगुणकं प्राज्ञ इत्युच्यते एकाज्ञानावभासकत्वात्[५]। अस्य प्राज्ञत्व[६] मस्य

---

१ कारणावस्थायां प्रकृतिपुरुषमात्रव्यतिरिक्तस्य स्थूलसूक्ष्मकार्यप्रपञ्चस्यैवाभावादानन्दबाहुल्यमिति। २ शरीराच्छादकचर्मवदात्माच्छादकत्वादज्ञानस्यैव कोश इतिव्यवहारः। ३ सर्वस्य स्थूलसूक्ष्मोपाधेः कारणोपाधौ लीनत्वात्सुषुप्तित्वमित्यर्थः। ४ जीवगताज्ञानसुषुप्त्यवस्थापन्नाहंकारादिविक्षेपसंस्कारादिरूपानिकृष्टोपाधित्वेन मलिनसत्त्वप्रधानेत्यर्थः। ५ ईश्वरगतमूलाज्ञानस्य जीवगताहङ्कारादिविक्षेपसंस्कारादिरूपाऽज्ञानस्य वस्तुत एकत्वेन तदवभासकेश्वरजीवचैतन्ययोरप्येकत्वमित्यर्थः। ६ संस्काररूपास्पष्टोपाधितया तदावृतत्वेनातिप्रकाशकत्वाभावात्प्राज्ञत्वमस्येत्यर्थः॥

ष्टोपाधितयाऽनतिप्रकाशकत्वात्। अस्यापीयं व्यष्टिरहङ्कारादि-कारणत्वात्कारणशरीरमानन्दप्रचुरत्वात्कोशवदाच्छादकत्वाच्चानन्द-मयः कोशः, सर्वोपरमत्वा [१] त्सुषुप्तिः, अत एव स्थूलसूक्ष्म-शरीरलयस्थानमिति चोच्यते। तदानीमेतावीश्वरप्राज्ञौ चैतन्यप्र-दीप्ताभिरतिसूक्ष्माभिरज्ञानवृत्तिभिरानन्दमनुभवतः "आनन्दभु-क्चेतोमुखः प्राज्ञ" इत्यादिश्रुतेः सुखमहमस्वाप्सं न किं चिदवेदि-षमित्युत्थितस्य परामर्शोपपत्तेश्च। अनयोः समष्टिव्यष्ट्योर्वनवृक्ष-योरिव जलाशयजलयोरिव चाभेदः। एतदुपहितयोरीश्वरप्राज्ञ-योरपि वनवृक्षावच्छिन्नाकाशयोरिव जलाशयजलगतप्रतिबिम्बा-काशयोरिव चाभेदः, "एष सर्वेश्वर" इत्यादिश्रुतेः। वनवृक्षतदव-च्छिन्नाकाशयोर्जलाशयजलगतप्रतिबिम्बाकाशयोर्वा आधारानु-पहितमहाकाशवदनयोरज्ञानतदुपहितचैतन्ययोराधा-रभूतं यदनुपहितं चैतन्यं तत्तुरीयमित्युच्यते "शिवं शान्तमद्वैतं चतुर्थं मन्यन्त" इत्यादिश्रुतेः। इदमेव तुरीयं शुद्धचैतन्यमज्ञानत-दुपहितचैतन्याभ्यां तप्तायःपिण्डवदविविक्तं स-

१ पञ्चीकृतस्थूलशरीरस्य व्यावहारिकस्यापञ्चीकृतसूक्ष्मशरीरे प्रातिभासिके प्रविलापितत्वात्तस्यापि प्रातिभासिकस्य स्वाप्नप्रपञ्चस्य स्वकारणेऽज्ञाने लीनत्वात्सर्वोपरतिरित्यर्थः॥

महावाक्यस्य वाच्यं, विविक्तं सल्लक्ष्यमिति चोच्यते[१]। अस्याज्ञानस्यावरणविक्षेपनामकमस्ति शक्तिद्वयम् । आवरणशक्तिस्तावदल्पोऽपि मेघोऽनेकयोजनायतमादित्यमण्डलमवलोकयितृनयनपथपिधायकतया यथाच्छादयतीव तथाऽज्ञानं परिच्छिन्नमप्यात्मानमपरिच्छिन्नमसंसारिणमवलोकयितृबुद्धिपथपिधायकतयाच्छादयतीवेति तादृशं ह्यावरणसामर्थ्यम् । तदुक्तम् "घनच्छन्नदृष्टिर्घनच्छन्नमर्कं यथा मन्यते निष्प्रभं चातिमूढः । तथा बद्धवद्भाति यो मूढदृष्टेः स नित्योपलब्धिस्वरूपोऽहमात्मे"ति । अनयावृतस्यात्मनः कर्तृत्व, भोक्तृत्व, सुख, दुःख, मोहात्मकतुच्छसंसारसंभावनापि भवति यथा स्वाज्ञानेनावृतायां रज्जौ सर्पत्वसंभावना ॥ विक्षेपशक्तिस्तु यथा रज्ज्वज्ञानं स्वावृतरज्जौ स्वशक्त्या सर्पादिकमुद्भावयत्येवमज्ञानमपि स्वावृतात्मनि विक्षेपशक्त्या आकाशादिप्रपञ्चमुद्भावयति तादृशं सामर्थ्यम् तदुक्तम् "विक्षेपशक्तिर्लिङ्गादिब्रह्माण्डान्तं जगत् सृजेदि"त्यादीति । शक्तिद्वयवदज्ञानोपहितं चैतन्यं स्वप्रधानतया निमित्तं स्वोपाधिप्रधानतयोपादानं च भवति[२] यथा लूतातन्तु स्वकार्यं

१ त्रयाणां चैतन्यानां चैतन्येन रूपेणैकत्वेऽपि अवच्छिन्नानवच्छिन्नत्वेन रूपेण वाच्यलक्ष्यत्वे संभवत इति भावः ॥ १ ॥

२ यथायस्कान्तसन्निधाने जड़मयं लोहं चेष्टते तथा चैतन्यसन्निधाने जड़मज्ञानं चेष्टत इत्यज्ञानविकारं प्रति चैतन्यस्य निमित्तत्वं जड़ाकाशादिकार्यं प्रति मायायाः साक्षादुपादानत्वेन मायाविन ईश्वरस्यापि परम्परयोपचारादुपादानत्वं न विरुध्यत इत्यर्थः ॥

प्रति स्वचैतन्यप्रधानतया निमित्तं स्वशरीरप्रधानतयोपादानं च भवति। तमःप्रधानविक्षेपशक्तिमदज्ञानोपहितचैतन्यादाकाश आकाशाद्वायुर्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी चोत्पद्यते "तस्माद्वा एतस्मादात्मन आकाशः संभूत" इत्यादिश्रुतेः। तेषु जाड्याधिक्यदर्शनात्तमःप्राधान्यं तत्कारणस्य, तदानीं सत्त्वरजस्तमांसि कारणगुणप्रक्रमेण तेष्वाकाशादिषूत्पद्यन्ते, एतान्येव सूक्ष्मभूतानि तन्मात्राण्यपञ्चीकृतानि चोच्यन्ते। एतेभ्यः सूक्ष्मशरीराणि स्थूलभूतानि चोत्पद्यन्ते, सूक्ष्मशरीराणि सप्तदशावयवानि लिङ्गशरीराणि, अवयवास्तु ज्ञानेन्द्रियपञ्चकं बुद्धिमनसी कर्मेन्द्रियपञ्चकं वायुपञ्चकं चेति। ज्ञानेन्द्रियाणि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणाख्यानि। एतान्याकाशादीनां सात्त्विकांशेभ्यो व्यस्तेभ्यः पृथक्पृथक् क्रमेणोत्पद्यन्ते। बुद्धिर्नाम निश्चयात्मिकान्तःकरणवृत्तिः, मनो नाम संकल्पविकल्पात्मिकान्तःकरणवृत्तिः, अनयोरेव चित्ताहङ्कारयोरन्तर्भावः, एते पुनराकाशादिगतसात्त्विकांशेभ्यो मिलितेभ्यो बुद्ध्यादय उत्पद्यन्ते। एतेषां प्रकाशात्मकत्वात्सात्त्विकांशकार्यत्वम्, इयं बुद्धिर्ज्ञानेन्द्रियैः सहिता सती विज्ञानमयकोशो भवति, अयमात्मा १ कर्तृत्वभोक्तृत्वसुखित्वदुःखित्वाद्यभिमानित्वेनेहलोकपरलोकगामी व्यावहारिको जीव इत्युच्यते। मनस्तु ज्ञानेन्द्रियैः

१ तप्तायःपिण्डवद्बुद्ध्यारोपितं चैतन्यम्॥

सहितं सन्मनोमयकोशो भवति। कर्मेन्द्रियाणि वाक्पाणिपाद-पायूपस्थाख्यानि,एतानि पुनराकाशादीनां रजोंशेभ्यो व्यस्तभूतेभ्यः पृथक्पृथक्क्रमेणोत्पद्यन्ते,वायवः प्राणाऽपानव्यानोदानसमानाः, प्राणो नाम प्राग्गमनवान्नासाग्रस्थानवर्ती, अपानो नामावाग्गमनवान्पाय्वादिस्थानवर्ती, व्यानो नाम विष्वग्गमनवानखिलशरीरवर्ती, उदानो नाम कण्ठस्थानीय ऊर्ध्वगमनवानुत्क्रमणवायुः,समानो नाम शरीरमध्यगताशितपीतान्नादिसमीकरणकरः। केचित्तु नागकूर्मकृकलदेवदत्तधनञ्जयाख्याः पञ्चान्येऽपि वायवः सन्तीति वदन्ति, नाग उद्गिरणकरः, कूर्म उन्मीलनकरः, कृकलः क्षुत्करः, देवदत्तो विजृम्भणकरः, धनञ्जयः पोषणकरः,तथाचोक्तम् "उद्गारे नाग आख्यातः कूर्म उन्मीलने स्मृतः। कृकलः क्षुत्करो ज्ञेयो देवदत्तो विजृम्भणे। न जहाति मृतं वापि सर्वव्यापी धनञ्जय" इति। एतेषां प्राणादिष्वन्तर्भावात्प्राणादयः पञ्चैवेति केचित्। एतत्प्राणादिपञ्चकमाकाशादिगतरजोंऽशेभ्यो मिलितेभ्य उत्पद्यते, इदं प्राणादिपञ्चकं कर्मेन्द्रियैः सहितं सत्प्राणमयकोशो भवति,अस्य क्रियात्मकत्वेन रजोंऽशकार्यत्वम्। एतेषु कोशेषु विज्ञानमयो ज्ञानशक्तिमान्कर्तृरूपः,मनोमय इच्छाशक्तिमान्करणरूपः,प्राणमयः क्रियाशक्तिमान्कार्यरूपो योग्यत्वादेवमेतेषां विभाग इति वर्णयन्ति। एतत्कोशत्रयं मिलितं सत्सूक्ष्मशरीरमित्युच्यते। अत्राप्यखिलसूक्ष्मशरीरमेकबुद्धिविषयतया वनवज्जलाशयवद्वा समष्टिरनेकबुद्धिविषतया वृक्षवज्जलवद्वा व्यष्टिरपि भवति

एतत्समष्ट्युपहितं चैतन्यं सूत्रात्मा हिरण्यगर्भः प्राणश्चेत्युच्यते। सर्वत्रानुस्यूतत्वाज्ज्ञानेच्छाक्रियाशक्तिमदुपहितत्वादपञ्चीकृतप्रपञ्चसमष्टाभूताभिमानित्वाच्च, अस्यैषा समष्टिः स्थूलप्रपञ्चापेक्षया सूक्ष्मत्वात्सूक्ष्मशरीरं विज्ञानमयादिकोशत्रयं जाग्रद्वासनामयत्वात्[१] स्वप्नोऽत एव स्थूलप्रपञ्चलयस्थानमित्युच्यते" एतद्व्यष्ट्युपहितं चैतन्यं तैजसो भवति तेजोमयान्तःकरणोपहितत्वात्, अस्यापीयं व्यष्टिः स्थूलशरीरापेक्षया सूक्ष्मत्वात्सूक्ष्मशरीरं विज्ञानमयादिकोशत्रयं जाग्रद्वासनामयत्वात् स्वप्नोऽत एवस्थूलशरीरप्रपञ्चलयस्थानमिति चोच्यते, एतौ सूत्रात्मतैजसौ तदानीं मनोवृत्तिभिःसूक्ष्मविषयाननुभवत इति "प्रविविक्तभुक् तैजस" इत्यादिश्रुतेः। अत्रापिसमष्टिव्यष्ट्योस्तदुपहितसूत्रात्मतैजसयोर्वनवृक्षवत्तदवच्छिन्नाकाशवच्च जलाशयजलवत्तद्गतप्रतिबिम्बाकाशवच्चाभेदः, एवं सूक्ष्मशरीरोत्पत्तिःस्थूलभूतानि तु पञ्चीकृतानि। पञ्चीकरणं तु आकाशादिपञ्चस्वेकैकं द्विधा समं विभज्य तेषु दशसु भागेषु प्राथमिकान्पञ्चभागान् प्रत्येकं चतुर्धा समं विभज्य तेषां चतुर्णां भागानां स्वस्वद्वितीयार्द्धभागपरित्यागेन भागान्तरेषु योजनम्, तदुक्तम् "द्विधा विधाय चैकैकं चतुर्धा प्रथमं पुनः। स्वस्वेतरद्वितीयांशैर्योजनात् पञ्च पञ्चते"ति, अस्याप्रामाण्यं नाशङ्कनीयं "त्रिवृत्करण"मिति श्रुतेः

१ विराट्स्वरूपेणानुभूतस्थूलप्रपञ्चविषयकवासनामयत्वात्स्वप्नत्वमस्येत्यर्थः ॥

पञ्चीकरणस्याप्युपलक्षणत्वात्, पञ्चानांपञ्चात्मकत्वे समानेऽपि तेषु च वैशेष्यात्तद्वादस्तद्वाद इति न्यायेनाकाशादिव्यपदेशः संभवति, तदानीमाकाशे शब्दोऽभिव्यज्यते, वायौ शब्दस्पर्शौ, अग्नौ शब्दस्पर्शरूपाणि, अप्सु शब्दस्पर्शरूपरसाः, पृथिव्यां शब्दस्पर्शरूपरसगन्धाश्च, एतेभ्यः पञ्चीकृतेभ्यो भूतेभ्यो भूर्भुवःस्वर्महर्जनस्तपःसत्यमित्येतन्नामकानामुपर्युपरिवि द्यमानानामतल, वितल, सुतल, रसातल, तलातल, महातल, पाताल, नामकानामधोधोविद्यमानां लोकानां ब्रह्माण्डस्य तदन्तर्गतानां चतुर्विधस्थूलशरीराणां तदुचितानामन्नपानादीनां चोत्पत्तिर्भवति। चतुर्विधशरीराणि तु जरायुजाण्डजोद्भिज्जस्वेदजाख्यानि, जरायुभ्यो जातानि जरायुजानि मनुष्यपश्वादीनि, अण्डजानि अण्डेभ्यो जातानि पक्षिपन्नगादीनि, उद्भिज्जानि भूमिमुद्भिद्य जातानि कक्षवृक्षादीनि, स्वेदजानि स्वेदेभ्यो जातानि यूकामशकादीनि, अत्रापि चतुर्विधसकलस्थूलशरीरमेकानेकबुद्धिविषयतया वनवज्जलाशयवद्वा समष्टिः, वृक्षवज्जलवद्वा व्यष्टिरपि संभवति, एतत्समष्ट्युपहितं चैतन्यं वैश्वानरो विराड़ित्युच्यते सर्वनराभिमानित्वाद्विविधं राजमानत्वाच्च, अस्यैषा समष्टिः स्थूलशरीरमन्नविकारत्वादन्नमयकोशः स्थूलभोगायतनत्वाच्च स्थूलशरीरं जाग्रच्चेति व्यपदिश्यते एतद्व्यष्ट्युपहितं चैतन्यं विश्व इत्युच्यते सूक्ष्मशरीराभिमानमपरित्यज्य स्थूलशरीरादिप्रविष्टत्वात्, अस्याप्येषा व्यष्टिः स्थूलशरीरमन्न विकारत्वादेव हेतोरन्नमयकोशः

स्थूलभोगायतनत्वाच्च जाग्रदिति चोच्यते। तदानीमेतौ विश्व-वैश्वानरौ दिग्वातार्कवरुणाश्विभिः क्रमान्नियन्त्रितेन श्रोत्रादीन्द्रियपञ्चकेन क्रमाच्छब्दस्पर्शरूपरसगन्धानग्नीन्द्रोपेन्द्रयमप्रजापतिभिः क्रमान्नियन्त्रितेन वागादीन्द्रियपञ्चकेन क्रमाद्वचनादानगमनविसर्गानन्दांश्चन्द्रचतुर्मुखशङ्कराच्युतैः क्रमान्नियन्त्रितेन मनोबुद्ध्यऽहङ्कारचित्ताख्येनान्तरिन्द्रियचतुष्केण क्रमात्संकल्पनिश्चयाहङ्कारचिन्ताख्यांश्च सर्वानेतान् स्थूलविषयाननुभवतः"जागरितस्थानो बहिःप्रज्ञ"इत्यादिश्रुतेः, अत्राप्यनयोः स्थूलव्यष्टिसमष्ट्योरेतदुपहितविश्ववैश्वानरयोश्च वनवृक्षवत्तदवच्छिन्नाकाशवच्च जलाशयजलवत्तद्गतप्रतिबिम्बाकाशवच्च पूर्ववद्भेद,: एवं पञ्चीकृतभूतेभ्यः स्थूलप्रपञ्चोत्पत्तिः"एतेषां स्थूलसूक्ष्मकारणप्रपञ्चानामपि समष्टिरेकोमहान्प्रपञ्चो भवति यथाऽवान्तरवनानां समष्टिरेकं महद्वनं भवति यथा वाऽवान्तरजलाशयानां समष्टिरेको महान् जलाशयः। एतदुपहितंवैश्वानरादीश्वरपर्यन्तंचैतन्यमप्यवान्तरवनावच्छिन्नाकाशवदवान्तरजलाशयगतप्रतिबिम्बाकाशवच्चैकमेव आभ्यां महाप्रपञ्चतदुपहितचैतन्याभ्यां तप्तायःपिण्डवदविविक्तं सदनुपहितचैतन्यं सर्वं खल्विदं ब्रह्मेति वाक्यस्य वाच्यं भवति विविक्तंसल्लक्ष्यमपि भवति ॥ एवं वस्तुन्यवस्त्वारोपोऽध्यारोपः सामान्येन प्रदर्शितः ॥ इदानीं प्रत्यगात्मनीदमिदमयमयमारोपयतीति विशेषत उच्यते, अतिप्राकृतस्तु "आत्मा वै जायते पुत्र" इ-

तिश्रुतेः, स्वस्मिन्निव स्वपुत्रेऽपि प्रेमदर्शनात्, पुत्रे पुष्टे नष्टे चाहमेव पुष्टो नष्टश्चेत्याद्यनुभवाच्च पुत्र आत्मेति वदति, चार्वाकस्तु "स वा एष पुरुषोऽन्नरसमय" इत्यादिश्रुतेः, प्रदीप्तगृहात्स्वपुत्रं परित्यज्यापि स्वस्य निर्गमदर्शनात्, स्थूलोऽहं कृशोऽहमित्याद्यनुभवाच्च स्थूलशरीरमात्मेति वदति; । अपरश्चार्वाकस्तु "इन्द्रियाणीह प्राणैः सह प्रजापतिमेत्य ब्रूयुरि" त्यादिश्रुतेः, इन्द्रियाणामभावे शरीरचलनाभावात्, काणोऽहं बधिरोऽहमित्याद्यनुभवाच्चेन्द्रियाण्यात्मेति वदति, अपरश्चार्वाको "ऽन्योन्तरात्मा प्राणमय"इत्यादिश्रुतेः, प्राणाभाव इन्द्रियादिचलनायोगात्, अहमशनायावानहं पिपासावानित्याद्यनुभवाच्च प्राण आत्मेति वदति, अन्यस्तु चार्वाको"ऽन्योन्तरात्मा मनोमय"इत्यादिश्रुतेः, मनसि सुप्ते प्राणादेरभावात्, अहमेव संकल्पवानहं विकल्पवानित्याद्यनुभवाच्च मन आत्मेति वदति, बौद्धस्तु "अन्योऽन्तरात्मा विज्ञानमय" इत्यादिश्रुतेः, कर्तुरभावे करणस्य शक्त्यभावात्,अहंकर्त्ता भोक्तेत्याद्यनुभवाच्च बुद्धिरात्मेति वदति, प्राभाकरतार्किकौ"अन्योऽन्तरात्मानन्दमय"इत्यादिश्रुतेः, सुषुप्तौ बुद्ध्यादीनामज्ञाने लयदर्शनात्,अहमज्ञोऽहमज्ञानीत्याद्यनुभवाच्चाज्ञानमात्मेति वदतः,भट्टस्तु "प्रज्ञानघन एवानन्दमय" इत्यादिश्रुतेः, सुषुप्तौ प्रकाशाप्रकाशसद्भावात्, आत्मानमहं नजानामीत्याद्यनुभवाच्चाज्ञानोपहितं चैतन्यमात्मेति वदति, अपरोबौद्धः "असदेवेदमग्र आसीदि" त्यादिश्रुतेः, सुषुप्तौ सर्वाभावात्, अहं सुप्तोनासमित्युत्थितस्य

स्वाभावपरामर्शविषयानुभवाच्च शून्यमात्मेति वदति । एतेषां पुत्रादीनां शून्यपर्यन्तानामनात्मत्वमित्युच्यते एतैरतिप्राकृता-दिवादिभिरुक्तेषु श्रुतियुक्त्यनुभवाभासेषु पूर्वपूर्वोक्तश्रुतियुक्त्य-नुभवाभासानामुत्तरोत्तरश्रुतियुक्त्यनुभवाभासैरात्मत्वबाधदर्शना-त्पुत्रादीनामनात्मत्वं स्पष्टमेव, किञ्च "प्रत्यगस्थूलोऽचक्षुर-प्राणोऽमना अकर्ता चैतन्यं चिन्मात्रं सदि" त्यादिप्रबलश्रुतिविरोधादस्य पुत्रादिशून्यपर्यन्तस्य जड़स्य चैतन्याभास्यत्वेन घटादिवदनित्यत्वादहं ब्रह्मेति वेदान्तविद्वदनुभवप्राबल्याच्च त-त्तच्छ्रुतियुक्त्यनुभवाभासानां बाधितत्वादपि पुत्रादिशून्यपर्यन्त-मखिलमनात्मैवातस्तत्तद्भासकं नित्यशुद्धबुद्धमुक्तसत्यस्वभावं प्र-त्यक्चैतन्यमेवात्मवस्तु इति वेदान्तविद्वदनुभवः[१] ॥ एवमध्या-रोपः ॥ अपवादो नाम रज्जुविवर्त्तस्य सर्पस्य रज्जुमात्रत्व-वद्वस्तुविवर्तस्यावस्तुनोऽज्ञानादेः प्रपञ्चस्य वस्तुमात्रत्वम्, तदुक्तम्" सतत्त्वतोऽन्यथा प्रथा विकार इत्युदीरितः ॥ अतत्त्वतोऽन्यथा प्रथा विवर्त्त इत्युदीरितः" तथाहि एतद्भोगायतनं चतु-र्विधसकलस्थूलशरीरजातं तद्भोग्यरूपान्नपानादिकमेतदायतन-

१ एवमपि पुत्रादीनामात्मत्वप्रतिपादकपूर्वोक्तश्रुतीनामप्रा-माण्यं नाशङ्क्यम्, यत उत्तरोत्तरश्रुतीनामपि स्वार्थे तात्पर्याभा-वेन सर्वासामेव स्थूलारुन्धतीन्यायेन प्रत्यगस्थूल इत्यादि मुख्यश्रु-तिप्रतिपाद्यपरब्रह्मज्ञानोपकारकत्वमेव, न पुनः पुत्रादीनामेवा त्मत्व प्रतिपादकत्वमिति दिक् ॥

भूतभूरादिचतुर्दश भुवनानि एतदायतनभूतब्रह्माण्डं चैतत्सर्वमेतेषां कारणरूपपञ्चीकृतभूतमात्रं भवति, एतानि शब्दादिविषयसहितानि पञ्चीकृतानि भूतानि सूक्ष्मशरीरजातं चैतत्सर्वमेतेषां कारणरूपाऽपञ्चीकृतभूतमात्रं भवति,एतानि सत्त्वादिगुणसहितानि अपञ्चीकृतानि उत्पत्तिव्युत्क्रमेणैतत्कारणभूताज्ञानोपहित चैतन्यमात्रं भवति,एतदज्ञानोपहितं चैतन्यं चेश्वरादिकमेतदाधारभूतानुपहितं चैतन्यरूपं तुरीयं ब्रह्ममात्रं भवति ॥ आभ्यामध्यारोपवादाभ्यां तत्त्वंपदार्थशोधनमपि सिद्धं भवति॥ तथाहि अज्ञानादिसमष्टिरेतदुपहितसर्वज्ञत्वादिविशिष्टं चैतन्यमेतदनुपहितं चैतन्यं चैतत्त्रयं तप्तायःपिण्डवदेकत्वेनावभासमानं तत्पदवाच्यार्थो भवति, एतदुपाध्युपहिताधारभूतमनुपहितं चैतन्यं तत्पदलक्ष्यार्थो भवति, अज्ञानादिव्यष्टिरेतदुपहितअल्पज्ञत्वादिविशिष्टं चैतन्यमेतदनुपहितं चैतन्यं चैतत्त्रयं तप्तायःपिण्डवदेकत्वेनावभासमानं त्वंपदवाच्यार्थो भवति, एतदुपाध्युपहिताऽऽधारभूतमनुपहितं प्रत्यगानन्दं तुरीयं चैतन्यं त्वंपदलक्ष्यार्थोभवति ॥ अथ महावाक्यार्थो वर्ण्यते ॥ इदं तत्त्वमसि वाक्यंसम्बन्धत्रयेणाऽखण्डार्थबोधकं भवति, सम्बन्धत्रयं नाम पदयोः सामानाधिकरण्यम्, पदार्थयोर्विशेषणविशेष्यभावः, प्रत्यगात्मपदार्थयोर्लक्ष्यलक्षणभावश्चेति। तदुक्तम् "सामानाधिकरण्यं च विशेषणविशेष्यता । लक्ष्यलक्षणसम्बन्धः पदार्थप्रत्यगात्मनामि"ति । सामानाधिकरण्यसम्बन्धस्ता-

वत्, यथासोऽयं देवदत्त इत्यस्मिन्वाक्ये तत्कालविशिष्टदेवदत्तवाचकसशब्दस्यैतत्कालविशिष्टदेवदत्तवाचकायंशब्दस्य चैकस्मिन्पिण्डे तात्पर्यसम्बन्धः, तथाच तत्त्वमसीति वाक्येऽपि परोक्षत्वादिविशिष्टचैतन्यवाचकतत्पदस्यापरोक्षत्वादिविशिष्टचैतन्यवाचकत्वंपदस्य चैकस्मिंश्चैतन्ये तात्पर्यसंबन्धः। विशेषणविशेष्यभावसंबन्धस्तु यथा तत्रैव वाक्ये सशब्दार्थस्य तत्कालविशिष्टदेवदत्तस्यायंशब्दार्थस्यैतत्कालविशिष्टदेवदत्तस्यान्योन्यभेदव्यावर्तकतया विशेषणविशेष्यभावस्तथात्रापि वाक्ये तत्पदार्थपरोक्षत्वादिविशिष्टचैतन्यस्य त्वंपदार्थापरोक्षत्वादिविशिष्टचैतन्यस्य चान्योन्यभेदव्यावर्तकतया विशेषणविशेष्यभावः, लक्ष्यलक्षणसंबन्धस्तु यथा तत्रैव सशब्दायंशब्दयोस्तदर्थयोर्वा परस्परं विरुद्धतत्कालैतत्कालविशिष्टत्वपरित्यागेनाविरुद्धदेवदत्तेन सह लक्ष्यलक्षणभावस्तथात्रापि वाक्ये तत्त्वंपदयोस्तदर्थयोर्वा विरुद्धपरोक्षत्वापरोक्षत्वादिविशिष्टत्वपरित्यागेनाविरुद्धचैतन्येन सह लक्ष्यलक्षणभावः, इयमेव भागत्यागलक्षणेत्युच्यते। अस्मिन्वाक्ये नीलमुत्पलमितिवाक्यवद्वाक्यार्थो न सङ्गच्छते तत्र तु नीलपदार्थस्य नीलगुणस्योत्पलपदार्थोत्पलद्रव्यस्य च शुक्लपटादिव्यावर्तकतयाऽन्योन्यविशेषणविशेष्यभावसंसर्गस्यान्यतरविशिष्टस्यान्यतरस्य तदैक्यस्य वा वाक्यार्थत्वाङ्गीकारे प्रमाणान्तरविरोधाभावात्तद्वाक्यार्थः संगच्छते, अत्र तु तदर्थपरोक्षत्वादिविशिष्टचैतन्यस्य त्वमर्थापरोक्षत्वादिविशिष्टचैतन्यस्य चान्योन्यभेदव्यावर्त्तकतया विशेषणविशेष्यभावसंसर्ग-

स्यान्यतरविशिष्टस्यान्यतरस्य तदैक्यस्य च वाक्यार्थत्वाङ्गीकारे प्रत्यक्षादिप्रमाणविरोधाद्वाक्यार्थो न संगच्छते। तदुक्तम्, "संसर्गो वा विशिष्टो वा वाक्यार्थो नात्र संमतः ॥ अखण्डैकरसत्वेन वाक्यार्थो विदुषां मत" इति। अत्र गङ्गायां घोषः प्रतिवसतीतिवाक्यवज्जहल्लक्षणापि न संगच्छते तत्र तु गङ्गाघोषयोराधाराधेयभावलक्षणस्य वाक्यार्थस्याशेषतो विरुद्धत्वाद्वाच्यार्थमशेषतः परित्यज्य तत्संबन्धितीरे लक्षणाया युक्तत्वाज्जहल्लक्षणा संगच्छते, अत्र तु परोक्षत्वापरोक्षत्वादिविशिष्टचैतन्यैकत्वलक्षणस्य वाक्यार्थस्य भागमात्रे विरोधाद्भागान्तरमपि परित्यज्यान्यलक्षणाया अयुक्तत्वाज्जहल्लक्षणा न संगच्छते। नच गङ्गापदं स्वार्थपरित्यागेन तीरपदार्थं यथा लक्षयति तथा तत्पदं त्वंपदं वा स्वार्थपरित्यागेन त्वंपदार्थं तत्पदार्थं वा लक्षयतु, अतः कुतो जहल्लक्षणा न संगच्छत इति वाच्यम्। तत्र तीरपदाश्रवणेन तदर्थाप्रतीतौ लक्षणया तत्प्रतीत्यपेक्षायामपि तत्त्वंपदयोः श्रूयमाणत्वेन तदर्थप्रतीतौ लक्षणया पुनरन्यतरपदेनान्यतरपदार्थप्रतीत्यपेक्षाभावात्, श्रुतवाक्यस्य मुख्यार्थविरोधे मुख्यार्थसम्बन्धिन्यश्रुतपदार्थे लक्षणेति सर्वजनप्रसिद्धम्। अत्र शोणोधावतीतिवाक्यवदजहल्लक्षणापि न संभवति, तत्रशोणगुणगमनलक्षणस्य वाक्यार्थस्य विरुद्धत्वात्तदपरित्यागेन तदाश्रयाश्वादिलक्षणया तद्विरोधपरिहारसंभवादजहल्लक्षणा संभवति, अत्र तु परोक्षत्वापरोक्षत्वादिविशिष्टचैतन्यैकत्वस्य वाक्यार्थस्य विरुद्धत्वात्तदपरित्यागेन तत्संबन्धिनो यस्य

कस्य चिदर्थस्य लक्षितत्वेपि तद्विरोधपरिहारासंभवादजहल्लक्षणापि न संभवत्येव । नच तत्पदं त्वंपदं वा स्वार्थविरुद्धांशपरित्यागेनांशान्तरसहितं त्वंपदार्थं तत्पदार्थं वा लक्षयतु अतः कथं प्रकारान्तरेण भागलक्षणाङ्गीकरणमिति वाच्यम् । एकेन पदेन स्वार्थांशपरित्यागपदार्थान्तरस्वीकारोभयलक्षणाया असम्भवात्, पदान्तरेण तदर्थप्रतीतौ लक्षणया पुनस्तत्प्रतीत्यपेक्षाभावाच्च । तस्माद्यथा सोऽयं देवदत्त इति वाक्यं तदर्थो वा तत्कालैतत्कालविशिष्टदेवदत्तैकत्वलक्षणस्य वाक्यार्थस्यांशे विरोधाद्विरुद्धं तत्कालैतत्कालविशिष्टांशं परित्यज्याविरुद्धं देवदत्तांशमात्रं लक्षयति तथा तत्त्वमसीति वाक्यं तदर्थो वा परोक्षत्वापरोक्षत्वादिविशिष्टचैतन्यैकत्वलक्षणस्य वाच्यार्थस्यांशे विरोधाद्विरुद्धपरोक्षत्वापरोक्षत्वादिविशिष्टांशं परित्यज्याविरुद्धमखण्डचैतन्यमात्रं लक्षयतीति ॥ अथाधुनाऽहं ब्रह्मास्मीत्यनुभववाक्यार्थो वर्ण्यते ॥ एवमाचार्येणाध्यारोपाऽपवादपुरस्सरं तत्त्वंपदार्थौ शोधयित्वा वाक्येनाखण्डार्थेऽवबोधितेऽधिकारिणोऽहं नित्यशुद्धबुद्धमुक्तसत्यस्वभावपरमानन्दानन्ताद्वयं ब्रह्मास्मीत्यखण्डाकाराकारिता चित्तवृत्तिरुदेति, सा तु चित्प्रतिबिम्बसहिता सती प्रत्यगभिन्नमज्ञातं परं ब्रह्म विषयीकृत्य तद्गताज्ञानमेव बाधते। तदा पटकारणतन्तुदाहे पटदाहवदखिलकारणेऽज्ञाने बाधिते सति तत्कार्यस्याखिलस्य बाधितत्वात्तदन्तर्भूताखण्डाकाराकारिता चित्तवृत्तिरपि बाधिता भवति, तत्र प्रतिबिम्बितं चैतन्यमपि यथादीपप्रभादित्यप्रभावभासनाऽसमर्था सती तयाभिभूता भवति तथा

स्वयंप्रकाशमानप्रत्यगभिन्नपरब्रह्मावभासनानर्हतया तेनाभिभूतं सत्स्वोपाधिभूताखण्डवृत्तेर्बाधितत्वाद्दर्पणाभावे मुखप्रतिबिम्बस्य मुखमात्रत्ववत्प्रत्यगभिन्नपरब्रह्ममात्रं भवति, एवं च सति "मनसैवानुद्रष्टव्यं" "यन्मनसा न मनुत" इत्यनयोः श्रुत्योरविरोधः, वृत्तिव्याप्यत्वाङ्गीकारेण फलव्याप्यत्वप्रतिषेधप्रतिपादनात्[1] तदुक्तम् "फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निवारितम्। ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिते"ति "स्वयंप्रकाशमानत्वान्नाभास उपयुज्यत" इति च। जड़पदार्थाकाराकारितचित्तवृत्तेर्विशेषोस्ति[2]।

१ अन्तष्करणवृत्तिरावरणनिवृत्त्यर्थमज्ञानावच्छिन्नं चैतन्यं व्याप्नोतीत्येतद्वृत्तिव्याप्यत्वमङ्गीक्रियते, आवरणभङ्गानन्तरं स्वयंप्रकाशमानं चैतन्यं फलचैतन्यमित्युच्यते तस्मिन्फलचैतन्ये निष्फला काचिद्वृत्तिर्न व्याप्नोति आवरणभङ्गस्य प्रागेव कृतत्वेन प्रयोजनाभावादित्यर्थः। २अहं ब्रह्मास्मीत्यज्ञानावच्छिन्नब्रह्माकारा चित्तवृत्तिस्तदावरकमज्ञानमात्रं निवर्तयति ब्रह्म तु स्वप्रकाशात्मत्वात्स्वयमेव प्रकाशते न तु वृत्तिबिम्बितचिदाभासेन चैतन्यं प्रकाश्यते तत्र तस्यासामर्थ्यात्, अयं घट इति घटाकाराकारितचित्तवृत्तिस्तु घटावच्छिन्नचैतन्यावरकमज्ञानं निवर्त्य निवर्तमाना स्वप्रतिबिम्बितचिदाभासेन जड़ं घटमपि प्रकाशयति, अतस्ततो विशेषोऽस्तीत्यर्थः ॥

तथाहि अयं घट इति घटाकाराकारितचित्तवृत्तिरज्ञातं घटं विषयीकृत्य तद्गताज्ञाननिरसनपुरस्सरं स्वगतचिदाभासेन जडं घटमपि भासयति, तदुक्तम् "बुद्धितत्स्थचिदाभासौ द्वावपि व्याप्नुतो घटम्। तत्राज्ञानं धिया नश्येदाभासेन घटः स्फुरेत्"। यथा दीपप्रभामण्डलमन्धकारगतं घटपटादिकं विषयीकृत्य तद्गतान्धकारनिरसनपुरःसरं स्वप्रभया तदपि भासयतीति। एवंस्वस्वरूपचैतन्यसाक्षात्कारपर्यन्तं श्रवणमनननिदिध्यासनसमाध्यनुष्ठानस्यापेक्षितत्वात्तेऽपि प्रदर्श्यन्ते। श्रवणं नाम षड्विधलिङ्गैरशेषवेदान्तानामद्वितीयवस्तुनि तात्पर्यावधारणम्। लिङ्गानि तु, उपक्रमोपसंहाराभ्यासापूर्वताफलार्थवादोपपत्त्याख्यानि। प्रकरणप्रतिपाद्यस्यार्थस्य तदाद्यन्तयोरुपपादनमुपक्रमोपसंहारौ, यथा छान्दोग्ये षष्ठाध्याये प्रकरणप्रतिपाद्यस्याद्वितीयवस्तुन एकमेवाद्वितीयमित्यादौ ऐतदात्म्यमित्यन्ते च प्रतिपादनम्। प्रकरणप्रतिपाद्यस्य वस्तुनस्तन्मध्ये पौनःपुन्येन प्रतिपादनमभ्यासः, यथा तत्रैवाद्वितीयवस्तुनो मध्ये तत्त्वमसीति नवकृत्वः प्रतिपादनम्। प्रकरणप्रतिपाद्यस्याद्वितीयवस्तुनः प्रमाणान्तराविषयीकरणमपूर्वता, यथा तत्रैवाद्वितीयवस्तुनो मानान्तराविषयीकरणम्। फलं तु प्रकरणप्रतिपाद्यस्यात्मज्ञानस्य तदनुष्ठानस्य वा तत्तत्र च श्रूयमाणं प्रयोजनम्, यथा तत्र "चार्यवान्पुरुषोवेद" "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्य" इत्यद्वितीयवस्तुज्ञानस्य तत्प्राप्तिप्रयोजनं श्रूयते। प्रकरणप्रतिपाद्यस्य तत्तत्र प्रशंसनमर्थवादः, यथा त-

चैवो "ततमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमि"त्यद्वितीयवस्तुप्रशंसनम् । प्रकरणप्रतिपाद्यार्थसाधने तत्रतत्र श्रूयमाणा युक्तिरुपपत्तिः, यथा तत्र "सौम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येवसत्यमि"त्यादावद्वितीयवस्तुसाधने विकारस्य वाचारम्भणमात्रत्वे युक्तिः श्रूयते । मननं तु श्रुतस्याद्वितीयवस्तुनो वेदान्तार्थानुगुणयुक्तिभिरनवरतमनुचिन्तनम् । विजातीयदेहादिप्रत्ययरहिताऽद्वितीयवस्तुसजातीयप्रत्ययप्रवाहो निदिध्यासनम् । समाधिर्द्विविधः सविकल्पको निर्विकल्पकश्चेति, तत्र सविकल्पको नाम ज्ञातृज्ञानादिविकल्पभेदलयानपेक्षयाद्वितीयवस्तुनि तदाकाराकारितायाश्चित्तवृत्तेरवस्थानम्, तदा मृन्मयघटादिभाने मृद्भानवद्द्वैतभानेऽप्यद्वैतवस्तु भासते। तदुक्तम् "दृशिस्वरूपं गगनोपमं परं सकृद्विभातं त्वजमेकमक्षरम्। अलेपकं सर्वगतं यदद्वयं तदेव चाहं सततं विमुक्त ओमि"ति। निर्विकल्पकस्तु ज्ञातृज्ञानादिविकल्पभेदलयापेक्षयाऽद्वितीयवस्तुनि तदाकाराकारितायाश्चित्तवृत्तेरतितरामेकीभावेनावस्थानम्, तदा तु जलाकाराकारितलवणानवभासेन जलमात्रावभासवदद्वितीयवस्त्वाकाराकारितचित्तवृत्त्यऽनवभासेनाद्वितीयवस्तुमात्रमेव भासते ततश्चास्य सुषुप्तेश्चाभेदशङ्का न भवति उभयत्र वृत्त्यभाने समानेऽपि तत्सद्भावासद्भावमात्रेण तयोर्भेदोपपत्तेः । अस्याङ्गानि यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयः। तत्राहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः,

शौचसंतोषतप:स्वाध्यायेश्वरप्रणिधानानि नियमा:, आसनानि करचरणादिसंस्थानविशेषलक्षणानि पद्मकस्वस्तिकादीनि, रेचक-पूरककुम्भकलक्षणा: प्राणनिग्रहोपाया: प्राणायामा:,[1] इन्द्रियाणां स्वस्वविषयेभ्य: प्रत्याहरणं प्रत्याहार:,[2] अद्वितीयवस्तुन्यन्तरिन्द्रियावधारणं धारणा,[3] तत्रा[4] द्वितीयवस्तुनि विच्छिद्यविच्छिद्यान्तरिन्द्रियवृत्तिप्रवाहीकरणं ध्यानम्, समाधिस्तूक्तलक्षणसविकल्पक

१ स च द्विविध:, अगर्भ: सगर्भश्चेति सुश्चेद् दक्षिणया वायुं मात्राहीनमनन्यधी: । पूरयेद्वामया तद्वत्कुम्भयेच्च सुषुम्णया । यावच्छ्वासं जितश्वासो भवेन्मासाज्जितेन्द्रिय इतिवचनात् प्रणवोच्चारणराहित्येनोक्तरेचकपूरककुम्भकक्रमेण प्राणनिरोधोऽगर्भ: प्राणायाम:, रेचयेत् षोडशेनैव तद्द्वैगुण्येन पूरयेत् । कुम्भयेच्च चतुष्षष्ट्या प्रणवार्थमनुस्मरन् इतिवचनात् षोडशप्रणवं मनसा जपन्दक्षिणया वायुं विरेच्य द्वात्रिंशत्संख्याकं प्रणवं मनसा समुच्चरन् वामया वायुमापूर्य चतुष्षष्टिसंख्याकं प्रणवं मनसा जपंस्तदर्थं च अकारोकारमकारार्द्धमात्रात्मकसार्द्धत्रिमात्रात्मकसार्द्धत्रिवलयाकारकुण्डलनीरूपं चिदानन्दकन्दं च मूलाधारादिब्रह्मरन्ध्रान्तमनुसन्दधत्सुषुम्णया चित्तमपि तदेकप्रवणं कुर्वन् यावच्छ्वसं कुम्भयेत् तदुक्तमाचार्यै:षोडश तद्द्विगुणचतुष्षष्टिमात्राणि च तानि च क्रमश: । रेचकपूरककुम्भकभेदैस्त्रिविध: प्रभञ्जनायाम इति २ श्रोत्रादीनामिन्द्रियाणां स्वस्वविषयेभ्य: शब्दादिभ्य: सकाशात्पाषाणोपरि प्रयुक्त: शरसंघातस्तद्वत्प्रत्यावर्त्तनं प्रत्याहार: ।

३ सर्वेषां बुद्धिसाक्षितया विद्यमाने वस्तुनि चित्तनिक्षेपणं धारणाइत्यर्थ: ४ धारणापाटवाभावेन चित्तस्थैर्याभावादद्वितीय वस्तुनि विच्छिद्यविच्छिद्य चित्तवृत्तिप्रवाहीकरणं ध्यानमित्याह । तत्रेति ॥

एव। एवमस्याङ्गिनो निर्विकल्पकस्य लयविक्षेपकषायरसास्वाद-लक्षणाश्चत्वारो विघ्नाः संभवन्ति। लयस्तावदखण्डवस्त्वनवलम्ब-चित्तवृत्तेर्निद्रा, अखण्डवस्त्वनवलम्बनेन चित्तवृत्तेरन्यावलम्बनं विक्षेपः, लयविक्षेपाभावेपि चित्तवृत्तेरागादिवासनया स्तब्धी-भावादखण्डवस्त्वनवलम्बनं कषायः, अखण्डवस्त्वनवलम्बनेनापि चित्तवृत्तेः सविकल्पकानन्दास्वादनं रसास्वादः, समाध्यारम्भस-मये सविकल्पकानन्दास्वादनं वा, अनेन विघ्नचतुष्टयेन विरहितं चित्तं निर्वातदीपवदचलं सदखण्डचैतन्यमात्रमवतिष्ठते यदा तदा निर्विकल्पकसमाधिरुच्यते तदुक्तम् "लये सम्बोधयेच्चित्तं वि-क्षिप्तं शमयेत्पुनः। सकषायं विजानीयाच्छमप्राप्तं नचलायेत्। नास्वादयेद्रसं तत्र निःसङ्गः प्रज्ञया भवेदि"ति "यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृते"[१]ति ॥

अथ जीवन्मुक्तस्य लक्षणमुच्यते॥ जीवन्मुक्तो नाम स्वस्वरूपाखण्ड-ब्रह्मज्ञानेन तदज्ञानबाधनद्वारा स्वस्वरूपाखण्डे ब्रह्मणि साक्षा-त्कृतेऽज्ञानतत्कार्यसंचितकर्म्मसंशयविपर्य्ययादीनामपि बाधित-त्वादखिलबन्धरहितो ब्रह्मनिष्ठः। अयं तु व्युत्थानसमये मांसशो-णितमूत्रपुरीषादिभाजनेन स्थूलशरीरेणान्ध्यमान्द्यापटुत्वादिभा-जनेन्द्रियग्रामेण,अशनायापिपासाभाजनेन प्राणेन शोकमोहा-

१ पञ्चभूमिकोपेतस्य चित्तस्य भूमिकात्रयपरित्यागेनावशिष्टं भूमिकाद्वयं समाधिरित्युच्यते, कास्ताः पञ्च भूमिकाः क्षिप्तं मूढं विक्षिप्तमेकाग्रं निरुद्धंचेति ॥

दिभाजनेनान्तःकरणेन च पूर्वपूर्ववासनया क्रियमाणानि कर्माणि भुज्यमानानि ज्ञानाविरुद्धप्रारब्धफलानि च पश्यन्नपि बाधितत्वात्परमार्थतो न पश्यति यथेन्द्रजालमिति ज्ञानवांस्तदिदमिन्द्रजालं पश्यन्नपि परमार्थमिदमिति न पश्यति "सचक्षुरचक्षुरिव सकर्णोऽकर्ण" इतिश्रुतेः । उक्तं च "सुषुप्तिवज्जाग्रति यो न पश्यति द्वयं तु पश्यन्नपि चाद्वयत्वतः । तथा च कुर्वन्नपि निष्क्रियश्च यः स आत्मविन्नान्य इतीह निश्चयः" । अस्य ज्ञानात्पूर्वं विद्यमानानामेवाहारविहारादीनामनुवृत्तिवच्छुभवासनानामेवानुवृत्तिर्भवति,शुभाशुभयोरौदासीन्यं वा तदुक्तम् "बुद्धाद्वैतं सतत्त्वस्य यथेष्टाचरणं यदि । शुनां तत्त्वदृशां चैव कोभेदोऽशुचिभक्षणे" इति "ब्रह्मवित्त्वंतथा मुक्त्वा स आत्मज्ञो न चेतर" इति । तदानीममानित्वादीनि ज्ञानसाधनानि, अद्वेष्टृत्वादयः सद्गुणाश्चालङ्कारवदनुवर्तन्ते, तदुक्तम् "उत्पन्नात्मावबोधस्य ह्यद्वेष्टृत्वादयो गुणाः । अयत्नतो भवन्त्यस्य न तु साधन रूपिण" इति किं बहुनाऽयं देहयात्रामात्रार्थमिच्छाऽनिच्छापरेच्छाप्रापितानि सुखदुःखलक्षणानि प्रारब्धफलान्यनुभवन्नन्तः करणाभासादीनामवभासकः सन् तदवसाने प्रत्यगानन्दपरब्रह्मणि प्राणे लीने सत्यज्ञानतत्कार्यसंस्काराणामपि विनाशात्परमकैवल्यमानन्दैकरसमखिलभेदप्रतिभासरहितमखण्डब्रह्माऽवतिष्ठते "न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते विमुक्तश्च विमुच्यत" इत्यादिश्रुतेरिति । इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीसदानन्दविरचितो वेदान्तसारः समाप्तः ॥

॥ श्रीरस्तु ॥

